न च बाग्देवतामसादोल्लसितवाग्विलासानां नवाङ्गीविवरणकरणमत्यद्भुतम् ति:श्रीमत्सेतुबन्ध-वासमवमत्यद् विपश्चिताम् । तदुक्तम्—

> सदन्विच्छिन्ना भूः स च निचितपां योजनशत
> सदा पान्थः पूषा गगनपरिमाणं कलयति ।
> इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
> सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ इति ।

अनन्तरविशेषणार्थमेव भङ्ग्यन्तरेण स्पष्टयति । येन नवाङ्गविवरण विहित विधिना गुरूपदेशानु-सारादिना, सम सह शिववध्वा सिद्धिलक्ष्म्या, कर्तुं विधातुं भव अननुभूतपूर्वं नूतनं गाढं प्रथिम्नां वरणमिव । 'इव'शब्दाध्याहारः कार्यः, 'सोपस्काराणि वाक्यानी'त्युक्तेः । वरणक वाविभवयुवती-मधुरमङ्गलोच्चारकुमारिकामुसलकमकुसुमणमण्डनाकदारदानादिपूर्वकः परिणयनसत्सद्वारदारदानप्रकारः प्रसिद्ध एव । किं कृत्वा ? 'उज्झित्वा' विहाय, भवयुवतीसंयोगम् । भवः संसारः स एव युवती, तस्याः संयोगं संपर्कम् । वर्तमाने भवे जन्मनि या युवतीसंयोगं नारीपरिभोगम्, अङ्गीकृतनिस्तुलचरितचारित्रश्रीसद्गुणगृहा-ङ्गत्वात् भगवत इति ।

१२ तथा, यैर्बहुशिष्यैः प्रभूतविनेयैः, शिवपुरपथप्रस्थितानां निर्वाणनगरमार्गे प्रति प्रचलितानां भव्यानां मोक्षार्थिप्राणिनाम्, सरल अकुटिल सरणिः पद्धतिः, मार्ग इत्यर्थः, कथिता उक्ता । पुंस्त्वम् प्राकृतत्वात् । ते भव्याः येन मार्गेण यान्ति गच्छन्ति तकत्, शिवपुरं पूर्वनिर्दिष्टम् ।

१३ तथा, गुणकणमपि गुणलेशमपि परिकथयितुं न शक्नोति । सत्कविरपि महानिचक्षणोऽपि येषामाराध्यपदाम्भोजानाम्, स्फुट प्रकटमेतत्, तेषां जिनेश्वरसूरीणां चरणशरणं प्रपद्ये ।

॥ इति गाथात्रयोदशकसमासार्थः ॥

## [ सुमतिगणिकृत श्रीजिनेश्वरसूरिचरित्रवर्णनम् । ]

अत्र चाय वाचनाचार्य पूर्णदेवगणि सुल्पादसंभवाम ।

§१) अम्भोहरदेशे जिनचन्द्राचार्यो देवगृहनिवासी चतुरशीतिसाधकनायक आसीत् । तस्य च व्याकरण-तर्क-च्छन्दो-ऽलङ्कारविशारदः शारदचन्द्रचन्द्रिकावदातनिर्मलचेता वर्धमाननामा शिष्योऽभूत् । तस्य च प्रवचनसारादिग्रन्थं वाचयतश्चतुरशीतिराशातना आयाताः । ताश्चेमाः, तथा हि—

> 'खेल' केलि' कलिं' कला कुल्लय' तंबोल' मुग्गालयं" —[ इत्यादि ]

> आसायणमो भवभमणकारणं इय विभाविउ जइणो ।
> मलिण त्ति न जिणमंदिरम्मि निवसंति इय समओ ॥

एताश्च परिभावयतस्तस्येयं मनसि भावना समजनि—यद्येताः कथंचिद् रक्ष्यन्ते तदैव भवकान्तार निस्तार स्यात् । अन्यथाऽगाधभवाम्भोधिमध्यनिपतितैरस्माभिरनन्तशो जन्म-जरा-मरण-दारिद्र्य-दौर्भाग्य-रोग-शोकादिसंतापपात्रमेवात्मा आशातनास्थानाश्रयेणैव कृतो भविष्यति । यत उक्तम्—

> आसायणमिच्छत्तं आसायणवज्जणा य सम्मत्तं ।
> आसायणानिमित्तं कुव्वइ दीहं च संसारं ॥

अथ च स्वकीयमनुभाष्यवसायस्तेन वर्धमानाभिधानसाधुना स्वगुरवे निवेदितः । ततस्तेन गुरुकर्मणा जिनचन्द्राख्येन तद्गुरुणा चिन्तितम्—अहो ! न सुन्दरोऽस्यायमाशयः, यदेनमाचार्यपदे संस्थाप्य देवगृहा-

रामादिमतिबन्धनियमित करोमी'ति । तथैव चाकारि तेन । तथापि तस्य पुण्यात्मनो मनो न रमते चैत्यगृहावसितौ । युक्त चैतद् । यत –

सुगन्धपङ्कजकलिते वाबतापरीतपुष्पोदिकोटिकपकोटकुसुम्यकीर्णे ।
॥ सरके सुपक्षिभिरच्छन्वत शुभ्रपक्षाः किं कुत्सिते सरसि पादमपि क्षिपन्ति ॥

ततो 'भस्त । एतत्सर्वं देवगृहमारामवाटिकादिकं स्वायत्त स्वेच्छया विलस । माऽस्मात्स्वदेश-ममाणान् मुञ्च' इत्यादिकोमलालापपुरस्सरं निवार्यमाणोऽपि –

'क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥'

इति न्यायेन 'यथा तथा भवो । कस्यापि सुविहितगुरोरङ्गीकारेण मया स्वहितमनुष्ठातव्यम्' इति विहितनिश्चितमतिबन्धः स्वाचार्यानुज्ञातः कतिपययतिपरिवृतो दिल्ली-वादलीप्रमुखस्थानेषु समाययौ ।

§ २) तस्मिंश्च समये तत्रैव श्रीउद्द्योतनाभिधानसूरयः सुविहिताः पूर्वमेव सत्पुण्यप्रेरिता इव विहृत्वा भ्रमवन् । तदक्षरणक्रमकमलमूले शुद्धमार्गतत्त्वं निश्चित्य ते श्रीवर्द्धमानसूरयः सुनिश्चितोपचितैर्हि सर्वसम्पत्तिमुपसंपत्तिमाददिरे । तदनन्तरं श्रीवर्द्धमानसूरीणामियं चिन्ता जाता – यदुतास्य सूरिमन्त्रस्य कोऽधिष्ठाता ? तत्परिज्ञानायोपवासत्रयं चक्रुः । यावत्तृतीयोपवासे धरणेन्द्रः समागतः । उक्तं च तेन यथा – 'सूरिमन्त्रस्याहमधिष्ठायकः ।' निवेदितं सर्वसूरिमन्त्रपदानां प्रत्येकं फलम् । ततो जातः स्फूर्तिमानाचार्यमन्त्रः । तेन सस्फूर्तयः सपरिवारा वर्द्धमानसूरयो जज्ञिरे ।

§ ३) अस्मिन् प्रस्तावे विज्ञप्तं पण्डितजिनेश्वरगणिना – 'भगवन् ! ज्ञातस्य जिनमतस्य किं स्याद् विशिष्टं फलम्, यदि क्वापि गत्वा सन्मार्गप्रकाशो न विधीयते ? श्रूयते च विस्तीर्णो गूर्जरत्रादेशः, किन्तु प्रचुरचैत्यवासाचार्यव्याप्तश्च । अतो यदि तत्र गम्यते इति मे मनः ।' ततः श्रीवर्द्धमानाचार्यैरुक्तम् – 'युक्तमुक्तं भवता । परं शकुन निमित्तादिकं परिभाव्यते ।' परिभावितं जातं च –शुभशकुनादिकम् । ततो भ्रामहमहत्सार्थसहिता आत्मनाऽष्टादशाचलिताः सूरयः । क्रमेण च पल्लीं प्राप्ताः । बहिर्भूमिगतानां तत्र पण्डितजिनेश्वरगणिसमन्वितानां श्रीवर्द्धमानसूरीणां मिलितः सोमध्वजो नाम जटाधरः । जाता तेन सहेष्टगोष्ठी । ततो गुण इष्ट प्रश्ने प्रश्नोत्तरे सूरिभिः । यथा –

का दौर्गत्यविनाशिनी हरिविरिञ्च्युग्रप्रवाची च को
वर्णः को व्यपनीयते च पथिकैरत्यादरेण श्रमः ।
चन्द्रः पृच्छति मन्दिरेषु मरुतां शोभाविधायी च को
दाक्षिण्येन नयेन विश्वविदितः को भा भुवि भ्राजते ॥

अत्रोत्तरम् 'सो म ध्व ज' – त्रिर्व्यस्तसमस्तः । सा ओम्, अध्वज, सोमध्वजः । ततस्तुष्टोऽसौ जटाधरः । समुत्पन्नः श्वेताम्बरदर्शनेऽस्य बहुमानः । कृता मासुकावदान-श्लोकसमस्त-गुणस्तुत्यादिका प्रतिपत्तिस्तेन । ततस्तेनैव भ्रामहसंघातेन सह प्रस्थिताः । प्राप्ताश्च क्रमेणाणहिल्लपत्तने । उत्तीर्णा मण्डपिकायाम् । तस्यां च प्राकारमात्रेऽपि नास्त्याश्रयः । सुविहितसाधुभक्तः श्रावकोऽपि नास्ति, यः स्थानादिकं याच्यते । यावत्तत्रोपविष्टानामेव घर्मो निकटीभूतः ।

ततोऽभिहितं पण्डितजिनेश्वरेण यथा – 'भगवन् ! एवमेवमुपविष्टानां न किमपि कार्यं सिध्यति ।' श्रीवर्द्धमानसूरयः – 'तर्हि सुशिष्य ! किं क्रियते ? ।' जिनेश्वरपण्डितः – 'यदि यूयं ब्रूथ ततोऽन्वेषयामि इत्यत्र तत्र व्रजामि ।' वर्द्धमानसूरयः – 'व्रज ।'

ततः सुगुरुचरणाम्भोजान्यभिवन्द्य गतस्तत्र । तयोचैर्गृहं श्रीदुर्लभराजमहीवल्लभसत्कपुरोहितसंबन्धि वर्तते । तदानीं च पुरोहितः स्वशरीराभ्यङ्गं कारयन्तिष्ठति । पण्डितजिनेश्वरेण तत्सामतः श्लोक पठितं यथा–

सर्ग-स्थिति-क्षयकृतो विक्षेपद्वयसंस्थिताः । श्रिये वः सन्तु जिनेन्द्र ! ब्रह्म-श्रीधर-शङ्कराः ॥

इत्याशीर्वादमसन्नमानसः स राजपुरोधाश्चिन्तयति–अहो ! विचक्षणोऽयं व्रती कश्चित् । अत्रान्तरे मन्दिरान्तर्वर्तिविविक्तशालमदेशे–'ॐ अपम पवित्र पुरुहूतमध्वरं यज्ञ महेशम्' इत्यादिवेदवाक्य-परावर्तनामन्यथाकुर्वतश्छात्राणाम् श्रुत्वोक्त पण्डितजिनेश्वरेण–'नेत्थं वेदपाठोच्चारिष्ट, किं तर्हीत्थम्' इत्येतद्वाक्यं विस्मयमानसः पुरोधाः कोमलगिरा पप्रच्छ–'भन्वनश्चीर्त नहि कश्चित्वाम शुद्धमशुद्धं वेदमिति परिच्छिनत्ति । ततो वैपरीत्येन वेदवाक्यपरावर्तनं युष्माभिर्वेदपाठनमिकारिभिः शूद्रैः कथमवागामि ? ।'

जिनेश्वरपण्डितेनोक्तम्–'महाभागधेयेश्वर ! द्विजेश्वर ! मया भारत यूयम्, सर्वमेतत् । नहि शूद्राणां वेदपाठाधिकारः । किन्तु नहि वयं शूद्राः । किं तर्हि, वेदचतुष्टयाध्यायिनो विप्रजातिन । तथा–

तपसा तापसो ज्ञेयो ब्रह्मचर्येण ब्राह्मणः । पापानि परिहरन्नेव परिव्राजोऽभिधीयते ॥

इति पूर्वाभिप्रतिपादितब्रह्मचरणलक्षणा एव वयम् ।'

पुरोहितः सामन्वम्–'भो ! मतिपुङ्गवाः ! कुतो देशाद् यूयमत्रागताः ? ।'

पण्डितजिनेश्वरगणिः–'दिल्लिकापुरीतिलकाधिराजात् ।'

पुरोधाः–'किं तद् अन्य धरणीतलमेतस्मिन् पत्तने मदन्यके चक्रादिलक्षणोपलक्षितं युष्मादृशमुनिराज हंसचरणन्यासैः ? ।'

प० जिनेश्वर–'विशालतपनातपशालयां वयं स्थिता स्मः ।'

पुरोहित–'किमिति तत्रावस्थिताः ? ।'

पं० जिनेश्वरः–'पुरोहितमिश्राः ! शेषस्थानानां विरोधिभिरवष्टब्धत्वात् ।'

पुरोहितः–'भवदृशानामपि शान्तात्मनामकृतागसां केचिद् विपक्षाः सन्ति ? ।'

पं० जिनेश्वरः–द्विजोत्तम !

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । उत्पद्यन्ते त्रयः पक्षा मित्रोदासीन-शत्रवः ॥

पुरोहित–'अहह ! चन्दनशीतलमनामपि युष्मादृशानां पापाः केचिदमित्रकारिणः ?'–इति कर्णे विधाय, पुनः 'अथ के पुनस्ते दुर्विधेया मया ज्ञेया ? ।'

प० जिनेश्वरः–'महात्मन् ! अस्तु कल्याणमेषाम् । किं मदेषां चर्चाकदर्थनेन ।'

पुरोहितः–स्वागतम्, अहा,

त एते सुकृतात्मानः परलोपकारकर्मठाः । परोपतापविमुक्ताः कीर्त्यन्ते यत्र साधवः ॥

ततः कथमेते महात्मानः स्वविरोधिनां नामोत्कीर्तनं करिष्यन्ति ? किञ्च, ममापि तेषां दुरात्मनां नामश्रवणमश्रेयस्करम् । तदृत्तस्यैवमन्यत् पृच्छामीति । प्रकाशम्–'एतावन्त एव यूयमागताः उत किमुतान्येऽपि केचिन्मुनयः सन्ति ? ।'

पं० जिनेश्वरः–'येषां वयं शिष्यलेशास्ते आसते समनीषाविशेषविशिष्टसुरगुरवत्रिजगद्गुरवोऽस्मद्गुरवः परित्यक्तपरिग्रहगृहिणीधनधान्यस्वजनस्नेहसंबन्धमूरम सुगृहीतनामधेयाः श्रीवर्धमानसूरयः ।'

पुरोधाः–सविस्मयम्, 'सर्वेऽपि कियन्तो भवन्तः ? ।'

पं० जिनेश्वरः — 'अष्टादशपापस्थानविरता अष्टादशसंख्या वयं वर्तामहे ।'

पुरोहितः — स्वगतम्, 'अहो ! यादृशा —

त्यक्तदाराः सदाधारा मुक्तभोगा जितेन्द्रियाः । गुरवो यतयो नित्यं सर्वजीवाभयप्रदाः ॥

इति धर्माम्नाये प्रतिपादिताः सद्गुरवस्तादृशा एते महात्मानः । तदेतान् स्वगृह एवानाय्य निर्धूत-रजसः, तच्चरणपूतरजसा पुनामि स्वगृहाङ्गणम् । भजामि सततमेतेषां प्रत्यक्षपुण्यपुञ्जानामीक्षणेनेक्षण-साफल्यमागिति ?' पुनः प्रकाशम्, — 'भो महासत्त्वाः ! चतुःशालविशालमदीयगृहे एकस्मिन् द्वारे प्रविश्य एकस्यां शालायां तिरस्करिणीं दत्त्वा तिष्ठत सर्वेऽपि यूयं सुखेन । भिक्षावेलायां मदीयमा-नुषेऽभीष्टे ब्राह्मणगृहेषु भिक्षयाऽपि न किमपि दूषणं भवतां भविष्यति ।'

ततः पण्डितजिनेश्वरगणिः — 'कोऽन्ये भवद्भ्योऽप्यौचितीचारुचेतसः' इति भणन्,

परोपकारे न च खेद न पात्रे न च दानान्तरम् । सदा लोकहितासक्ता रत्नदीपा इवोत्तमाः ॥

इति च पठन्, गतः स्वगुरुसमीपे । निवेदितः समस्तोऽपि वृत्तान्तः । ततः समीचीनमेतदिति विचिन्त्य तेऽपि तथैव सर्वं कुर्वन्ति ।

§४ ) एवं च तत्र स्थितानां स्वधर्मकर्मनिरतानां पत्तनमध्ये समुच्छलिता वार्ता — यदुत वसतिपालका यतयः समायाताः सन्ति । श्रुता च चैत्यगृहनिवासिभिः साध्वाभासैः । ततस्तैर्मिलित्वा आलोचितम् — 'यदुताहो ! न शोभनमेतद् यदेते वसतिपाला अत्रायाताः । यतः — "वयं सुविहिताः सर्वागमोक्त-क्रियाकारिणश्चैत्यवासपरिहारिणः, एते पुनः स्वच्छन्दचारिणः, सिद्धान्तोत्तीर्णमार्गप्रवर्तकाः, परिदेव-प्रम्यापहारिणः, सर्वैकत्र वासिनः, कामोन्मादनताम्बूलभक्ष्यान्तरास्वादनसचित्रविचित्रान्दोलनपल्यङ्कगण्डोपधा-नगण्डमसूरिकादिश्रृङ्गारचेष्टाविशेषप्रकटनेन नटविटादिवद् महाविलासिनः" — इत्यालापनपूर्वकमात्मानं प्रकटय्य परमधार्मिकत्वेन जनमध्ये प्रतिष्ठापयिष्यन्ति, अस्मांश्च सर्वज्ञाज्ञाचारिण इति कृत्वा व्यवस्थाप-यिष्यन्ति । ततो यावदेव कोमल एव व्याधिस्तावदेवोच्छिद्यते' — इत्यारभ्य बहिरेवैराश्मेष्य चिन्तित उपायः । यथा — 'वयं तावदधिकारितनयानध्यापयामः । ते चास्मत्कथितकारिण एव । ततस्तानाकार्य तन्मुखेन दूषणमेषामारोप्यैतानुच्छेदयामः ।' ततस्तैराहूता अधिकारिपुत्राः स्वच्छात्राः । भणितास्तैः स्वगृहे ग्राह्यावलोपनादिप्रदानेन । भणितास्ते युष्माभिर्लोकमध्ये एवं भणनीयम् — 'यदुतैते केचन परदेशात् श्वेताम्बररूपेण श्रीदुर्लभराजराज्यच्छिद्रान्वेषिणश्चराः समागताः सन्ति ।' कृतं च तत् तथैव तैः । ततः सा वार्ताऽऽदत्कान्तस्तैलबिन्दुरिव प्रसृता पत्तनमध्ये । प्रसरन्ती च राजसभायामपि प्राप्ता । ततो दुर्लभराजमहीभुजाऽभिहितम् — 'अहो ! यदेवंविधाः श्रुताः कापटिकाः श्वेतपटाः केऽप्यायाताः । ततस्तेषामाश्रयः केन दत्तः ? ।' तत्रस्थेनैव केनाप्युक्तम् — 'देव ! तवैव गुरुणा ते स्वगृहे धारिताः ।' ततो दुर्लभराजेनोक्तम् — 'आकारय तम् ।' आकारितः पुरोहितः, भणितश्च — 'भो शान्तिकर्ध ! श्वेताम्बररूपधारिणो ये हेरिका अत्र आगतास्तेषां किमिति त्वया स्थानमदायि ? ।' पुरोहितेनोक्तम् — 'केनेदं दूषणमुद्भावितम् — यत् हेरिकास्ते ? । किं बहुना यद्येषां दूषणमस्ति, तदा पारुत्थकशतैर्मया कर्पटिका मक्षिता । पुनर्यद्येषां मद्गृहवर्तिनां मुनीनां मध्ये दूषणगन्धोऽप्यस्ति तदोत्पाटयत्वेतां तद्दूषण-प्रकारः ?' — इत्युक्त्वा स्थितः पुरोहितः । ततः सन्ति तत्रामात्यश्रेष्ठिप्रमुखा भूयांसस्तद्रक्षकाः प्रधानपुरुषाः ।' परं न कश्चिदुत्पाटयति कर्पटिकाम् । को नाम परकीयां रुष्टां गृह्णाति ? । ततो भणितं राज्ञः पुरः पुरोहितेन — 'देव !

न विना परिवादेन रमते दुर्जनो जनः। श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यं न तृप्यति ॥
महतां यदेव भूषणं तदेव नीचास्तु दूषणाय मन्यन्ते। छिद्रं प्रथममपि मुग्धाः काकः पुनरात्मसात्कुरुते॥

ततो देव! ये केचन मद्गृहे वसन्ते मुनयस्ते मूर्तिमन्तो धर्मपिण्डाः क्षान्ति-दान्ति-सरलत्व-मृदुत्व-तपः-शील-सत्य-शौच-निष्परिग्रहत्वप्रमुखगुणरत्नकरण्डाः, चेतसाऽपि न पिपीलिकाया अप्युपघात-मिच्छन्ति, कुतः पुनरेवंविधमिह-परलोकविरुद्धमकार्यं ते करिष्यन्ति? अतो न तेषां दूषणलेशोऽप्यस्ति। परं केषाञ्चिद् दुरात्मनां विलसितमेतदिति।' राज्ञोऽपि चित्ते प्रतिभातं तत्, यथाह पुरोहितस्तथैवैतत् संभाव्यत इति।

§५) ततः एतां वार्तामाकर्ण्य सर्वैरपि चैत्यवासिभिः परिभावितम्—'परदेशिनः परदेशागतान् वादे निर्जित्य निस्सारयिष्यामः।' ततस्तैराहूयाभिहितः पुरोहितो यत्—'युष्मद्गृहावस्थायियतिभिः सह वयं विचारं कर्तुकामा आस्महे।' तेषां पुरस्तेनोक्तम्—'तान् पृष्ट्वा यत् स्वरूपं तद् भणिष्यामि।' ततः स्वभवने गत्वा भणितास्तेन ते भगवन्तो यथा—'विपक्षाः श्रीपूज्यैः सह विचारं कर्तुं समीहन्ते।' तैरुक्तम्—'किमयुक्तम्? एतदर्थमेव वयमागताः। परमत्रार्थे त्वया न मनागपि भेतव्यम्। किन्त्वेव(स्य) ते युष्माभिर्वक्तव्याः—'यदि यूयं तैः सह विवदितुकामास्तदा ये श्रीदुर्लभराजसभा यत्र भविष्यथ तत्र विचारं करिष्यन्ति। ते हि सद्धर्ममार्गप्रकटनार्थमेव निरीकटग्रामनगरादिषु अटमानाः सर्वत्र विचरन्तीति। ततो राजसमक्षं ते विचारकरणेऽतीव सोत्कण्ठास्तिष्ठन्तीति।' तस्तेषां पुरस्तथा पुरोधसोदिते, तैः समस्तैरात्मपाण्डित्यगर्वितैश्चिन्तितम्—सर्वेऽप्यधिकारिणस्तावदस्मद्वर्गीणास्तेभ्यो वैदेशिकेभ्यः कीदृगस्माकं भयमिति। भणितं च—'भवतु राजसमक्षं विचारः।' ततः भणितं तद्वचः पुरोहितेन। तैरप्यमुकस्मिन् वासरे पञ्चासरीयदेवगृहे विचारो भविष्यतीति निश्चित्य, निवेदितं सर्वेषां पुरः। पुरोहितेनाप्येकान्ते भणितो नृपो यथा—'देव! आगन्तुकमुनिभिः सह स्थानस्थिता विचारं विधातुकामास्तिष्ठन्ति। स च विचारो न्यायवादिराजसमक्षं क्रियमाणः शोभते। ततो युक्तायुक्तविचारदक्षेण निचारस्थाने भवद्भिः प्रसद्य भवितव्यम्।' राज्ञोक्तम्—'किमयुक्तम्? कर्तव्यमेवैतदस्माभिः।

§६) ततो निश्चितदिने सर्वैरेव देवगृहे सिंहासनगद्दिकाचाकचक्यादिप्रचुरतरमहत्तरासनसमूहोपेन-पूर्वदेश-दक्षिणदेशाद्युत्पन्नविचित्रकचिका-नर्मिका-पट्टचीर-मायूरि-गोमिकादिनिरवकीटभेदपीठराजिकाप्रच्छादितवराच्छचक्रतरपच्छादनपटीच्छटीच्छटीपट्टकप्रपञ्चमानवरवस्त्रप्रोञ्छनस्नपनसामग्रीपरस्वोदरस-माकल्यपदार्थकाण्डप्रमाणातिक्रान्तसन्दर्शमानप्रभूतरक्तिकोज्ज्वलमरकतपूर्णमसूर्यमयोचितक्रमेण कन्दुकोज्ज्वल-पञ्चवक्त्रमानननिर्माणतत्त्वक्रियावैचित्र्यपाडम्बरेण महत्त्वागम्भूतसाहित्यरसनरतातिशयशिक्षितनीतलिकापट्टांशुकम्-प्रच्छादनपट्टकलितकलितसुखासनमीकरणिकामात्यप्रेष्ठिप्रमुखजनाव्यग्रामगामामकिविशेषवेषसविशेषभूषम-भूषाविभूषितस्फुरत्तारशृंगारमाणिक्यविहितसकीयापार्थगुणवर्णनानिबद्धवरकाव्यप्रबन्धगीतोच्चारदिव्यदुन्दुभिस्फटाटो-पेन चैत्यवासिप्रमुखचतुरशीतिसंख्यचैत्यवासाचार्याः सूर्योदय एवागत्य सहस्तन्यस्तवास्तुकपुस्तिकाः समु-पविविशुः। तत्प्रधानपुरुषैराकारित श्रीदुर्लभराजमहाराजोऽपि महता भटचट[परि]करेणागत्योपविष्टवान्। ततोऽभिहित राज्ञा—'पुरोहित! क्षिप्रमाकारय तान् स्वसम्मतान् देशान्तरायातानाचार्यान्।' ततस्त्वरितत्वरितपदं गत्वा श्रीवर्धमानसूरीन् एवं विज्ञपयति—'भगवन्! पञ्चासरीयदेवगृहे सर्वेऽप्याचार्याः सपरिवारा उपविष्टाः। श्रीदुर्लभराजमहाराजश्च। सर्वेऽपि आचार्याः पृथिवीपतिनाऽऽकारिता युष्माकं मनुष्येण प्रेषितेन गन्तुमना। इदानीं युष्माकमागमनमव लोक्यते।' एवं पुरोहितमुखादाकर्ण्य श्रीवर्धमानसूरयः श्रीसुधर्मस्वामि-जंबूस्वामिप्रमुखचतुर्दशपूर्वधरान्

धूसरोधमात्रकेशाः मलपटलविलिप्तशुष्कवदनदेहपादविपादिकाः दर्शनमात्रेणैवोपलभ्यमानशान्ततालिङ्गित-तपोनिष्ठमूर्तयः। निश्चित ये केचन गुणरत्नालङ्कृतगात्रासिमगन्महनीयमहाशीलसंपत्प्राप्नुवन्ते ते एते महामतिनः—इत्येवं विमृशति क्षितीशे, अत्रान्तरे समुपन्यस्तं सूराचार्येण।

§९) यथा—'भो भो वसतिपालाः! सावधानमनोभिः श्रूयतां युष्माभिः। जिनभवननिवास एवेदानींतनमुनीनां समुचितः, तत्रैव निरपवादब्रह्मव्रतस्य संभवात्। यतीनां च तदेव गवेष्यते। न च शेषव्रतानामिव तत्रापि सापवादत्वमस्तीति वाच्यम्। सिद्धान्तेऽस्य सर्वव्रतेषु निरपवादत्वेनैव प्रतिपादनात्। यथा चोक्तम्—

नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं। मुत्तु मेहुणभावं न तं विणा रागदोसेहिं॥

वसतिवासे तु युवतीजनमनोहारिशब्दश्रवणादेर्न ब्रह्मव्रतं सम्यग् निर्वोढुं पार्यते, उत्कलिकादिप्रादुर्भावात्। तथा हि—नितम्बिनीनां कोकिलाकलकूजित गीतादिरवमधुरितरतिसौन्दर्ये च रूपमुपलभ्य भुक्तभोगानां यतीनां पूर्वानुभूतनिधुवनविलसितमतिसन्धानादय, अभुक्तभोगानां च तत्कुतूहलादयः प्रादुर्भवेयुः। यतीनां च सततं कर्णपीयूषवर्षिविशदगम्भीरमधुरस्वाध्यायध्वानं निशम्य केषांचित् शरीरागण्यलावण्यमिव निर्वर्ण्य प्रोषितपतिकादीनां तरुणीनां रिरंसादयः प्रादुष्युः। एवं चान्योऽन्यं निरन्तररूपावलोकनगीतश्रवणादिभिर्दुर्मथमन्मथदोःस्थ्याचारित्रभ्रंशादयोऽनेके दोषाः पुष्येयुः। यदोक्तम्—

चीयविस्सय विसयाणइ हरयीण ठाण जत्थ रूवाणि।
सद्दा य न सुव्वती ताणि य तेसिं न पिच्छंति॥
बंभवयस्स अगुत्ती लज्जानासो य पीइवुड्ढी य।
साहुतवोवणवासो निवारणा तित्थपरिहाणी॥

लौकिका अप्याहुः—

शृणु हृदय रहस्यं परमपथ्यं मुनीनां न खलु न खलु योषित्सन्निधिः संविधेयः।
हरति हि हरिणाक्षी क्षिप्तमक्षिक्षुरप्रप्रशमशमतनुं चित्रमभ्युद्यतानाम्॥

जिनगृहवासे तु न तथा निरन्तरस्त्रीसंसक्तिसंभवः। कदाचिच्चैत्यवन्दनार्थमेव क्षणमागत्य गच्छन्तीनां श्राविकादीनां यतिभिः सह तथाविधप्रसंगानुपपत्तेः। तस्मात् प्राणातिपातादिकानेकदोषदुष्टत्वेन परगृहनिवासत्वेऽनुपपन्ने सति जिनगृहवास एवाधुनिकसाधूनां सांगत्यं निरवद्यमर्हति। तथा हि, ऐदंयुगीनां जिन-गृहवासमन्तरेणोद्यानवासो वा स्यात् परगृहवासो वा स्यादिति विकल्पयुगलकमुद्भवपदवीमासादयति। तत्र द्वितीयविकल्पः समुत्पन्नोऽपि किल दासेरक इव प्रथमत एव निर्भरपदप्रहारजर्जरीकृतगात्रत्वेन नोत्थातुमुत्सहते। प्रथमोद्यानपक्षोऽप्यसपक्ष इव नाक्षपक्षविक्षेपदक्षतामुपक्षिपति। स्त्रीसंसक्त्याधाकर्मिकादि दोषकलापकलङ्कितत्वात्। तथा हि—उद्यानेऽपि निवसतां यतीनां नूतनचूताङ्कुरास्वादकूजत्कलकण्ठपञ्चमो-द्गारेणोन्मीलद्विविधविकिरत्कुसुमावलीपरिमलेन च तन्वन्मते समाहितचेतसामप्युत्कलिकोल्लासः। पञ्चमोद्गारादीनामुद्दीपनविभावत्वेन भरतादिशास्त्रेऽभिधानात्। तथा, विक्रीडितुमागतकामुककामिनी-संकुलत्वेन स्त्रीसंसक्त्यादौ पुनः किं ब्रूमहे। अथ वा नवनवतरशास्त्राभ्यासपरावर्तनपराणां यतीनां मा भूत्वेतज्जन्या दोषाः, तथापि लोकसंचारशून्योद्यानभूमौ वसतां सतां चौरचरटभटादिभिर्वस्त्रपात्राद्युपकरणा-पहारस्यापि संभवः। तदपहारे च शरीरसंयमविराधनाप्रसङ्गः। अथ 'समोसढो उज्जाणे भयवंतो सुहम्मसामी' तथा 'ठिओ भयवं वइरसामी उज्जाणे' इत्याद्यनेकोद्यानवासः श्रूयत इति चेत्, सत्यम्, सोऽनायाससंसर्गलोकगुप्तिकृद्दूरोद्यानविषयः। तस्य च प्रायेण कलिकाले लोकस्य राजतस्करपरचक्र

पक्षैर्वापितत्वेन चौरस्याद्यसंभव एव—इत्युद्यानवासः कथमधुनातनमुनीनां कल्प्यमानः शोभेत। तस्मादिदानीं जिनगृहवास एव साधूनां संगतः प्रतिभाति। न च तत्राधाकर्मिकादयो दोषाः। तथा च प्रयोग—चैत्यमिदानींतनमुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहितत्वात् तथाविधाहारवत्। न चायमसिद्धो हेतुः, जिनप्रतिमार्थं निष्पादिते आयतने आधाकर्मादिदोषानवकाशात्। यत्यर्थं क्रियमाणे हि तस्मिन्नाधाकर्मादिदोष प्रादुर्भवेत्। किं च यतीनां चैत्यनिवासमन्तरेण सांप्रतिकजिनभवनानां हानिः स्यात्। तथा हि—पूर्वं कालानुभावादेव श्रीमन्तोऽप्यप्रपञ्चेतसो देवगुरुतत्त्वप्रतिपत्तिभरनिर्भरतयैतदेव परं तत्त्वमिति मन्यमाना श्रावका परमादरेण चैत्यचिन्तामकरिष्यत्। सांप्रतं तु दुःषमादोषाक्रान्तत्वात् कुटुम्बसम्बन्धि-चिन्तातापजर्जरितचित्ततयैतस्ततो धावतां प्रायेण दुर्गतानां प्राद्धानां समयनेऽप्यागमन दुर्लभम्, आस्तां जिनमन्दिरे। तथा च कुतस्त्या तत्समारचनादिचिन्ता तेषाम्। श्रीमतां तु प्रतिकल्पमदाम्भसंभारविलासिनी मनसारक्षणक्षमक्ष्यक्षरसर्पकिम्मीनकुचकरुकृपीडनदुर्ललितानां निरन्तरमेव भूरिभूरि लिप्सया पार्थिवसेवा-हेवाकिनां जिनगृहावलोकनमेव न संपद्यते, दूरे तच्चिन्ता। तदभावे च जिनसदनानां विशरारुता स्यात्; तथा च तीर्थोच्छित्तिरापनीपद्यते। चैत्यान्तर्निवासे तु यतीनां तदुद्यमे च भूरि कालं जिनभवनान्यव तिष्ठेरन्, तथा च तीर्थमप्यनुच्छेद्य। तदव्यवच्छित्तिहेतोश्च किञ्चिदपवादासेवनमागमेऽपि समर्थमास्। यदाह—"जो जेण गुणेण हिओ जेण विणा वा न सिज्झए जं तु" इत्यादि। तदेव सूक्ष्मेक्षिकया विमृशतां विदुषां चेतसि चैत्यवास एवेदानीं संगतिमञ्चतीति।'

§११) इत्यादि सूराचार्योपन्यस्तं समस्तमपि साहृदयेऽवधार्य, ततो 'भाविनि भूतवदुपचार' इति न्यायादुक्तं समुत्कटप्रावादुककरटिकरटतटपाटनपटिष्ठनिष्ठुरमकोष्ठकेसरसटाभारभासुरकेसरिणा भगवता श्रीजिनेश्वरसूरिणा। यथा—'भो भोः सभासदः! सदैव सर्वत्र प्रमदम्बननीप्रतिमाभछद्वदः किंचिद्-युक्तायुक्तविचारविषयमुपन्यस्यमान मेक्षापूर्वकारिणो मात्सर्यमुत्सार्य माध्यस्थ्यमास्थाय सावधानीभूय शृण्वन्तु भवन्त सन्तः। तत्र 'जिनभवननिवास एवेदानींतनमुनीनां समुचितस्तत्र निरपवादप्रासप्रदस संभवात्, यतीनां च सदैव गवेष्यत' इत्यादिना, 'भगवयस्स अगुत्ती' इत्याद्यन्तेन यत् यतीनां परगृह वसतिदूषणं ग्रामे भवता भवतापहारिहारिद्वीकृशालिना; तदिदानीं विकल्पपूर्वकं विचार्यते। तथा हि—यदिदं परगृहवसतिः दूष्यते भवता यतीनां तत् किं सर्वदा उत इदानीमेव? यद्याद्य पक्षः, तदानीमुद्यानादिषु वसतां यतीनां कथञ्चिच्चौराद्युपद्रवात् कथं प्रतीकारः स्यात्? न च तदानीं कालसौस्थ्येन चौराद्युपसर्गाभावात् उद्यानवास एव यतीनां श्रूयते न परगृहवास इति वाच्यम्। तदापि तस्कराद्युपद्रव स्यानेकधाऽऽकर्णनात्। तथा तस्मिन्नपि काले मुनीनां परागाराश्रयस्यागमेऽभिधानाच्च। यदुक्तम्—

बाहिरगामे वुत्था उज्जाणे ठाणवसहिपडिलेहा। इहरा उ गहियभंडा वसहीवाघायउड्डाहो ॥
सव्वे वि य दिंता वसहिं मग्गंति जइ व समुदाणं। छव्वे संकलियनिवेयण तु तत्थेव उ नियट्टे ॥

तथा वृषभकल्पनया स्थापिते ग्रामादौ यतीनां वसतिगवेषणचिन्तामामुक्तम्—

नयराइएसु घिप्पइ वसही पुव्वामुह ठविय वसह। वामकडीइ निविट्ठ दीहीकयअग्गिमिक्कपयं ॥
सिंगक्खोडे कलहो ठाणं पुण नत्थि होइ चलणेसु। अहिट्ठाणे पुट्टरोगो पुच्छम्मि य फेडण जाण ॥
मुहमूलम्मि य चारी सिरे य कउहे य पूयसक्कारो। खंधे पट्टीइ भरो पुट्टम्मि य धायए वसहो ॥

न चैवंविधा वसतिग्रामादिमध्यमन्तरेण संभवति। उद्यानवासे एव च तदानीमभिमते प्रतिपद मुक्तन्यायेन ग्रामाद्यन्तर्वसतिनिरूपणा नोपपद्येत। एवं च तदानीमपि परगृहवसतेर्यतीनां भावात् प्रथमः पक्षः।

च 'तीर्थाव्यवच्छेद' इत्यन्तेन तीर्थाव्यवच्छित्त्या चैत्यवासप्रतिष्ठापनम्' तदपि विचारभारगौरवाक्षमत्वात् केवलं मुग्धलोकविप्रतारणमेव । यतः केयं तीर्थाव्यवच्छित्तिः ? किं यतीनां चैत्यान्तर्वासेन भगवद्देवगृह-बिम्बाद्यनुवृत्तिः ? आहोस्वित् शिष्यप्रतिशिष्यपारम्पर्येणाविच्छिन्नप्रसरा सम्यग्ज्ञानदर्शनचारित्रप्रवृत्तिः ? न तावदाद्या, चैत्यवासमन्तरेणापि भगवद्बिम्बाद्यनुवृत्तिमात्रदर्शनात् । तथा हि—पूर्वदेशेऽद्यापि श्रावकमात्रक-लोकेन कुलदेवतानुवृत्त्या नमसितकीकृत्वा । अपेयामक्ष्यादिनाऽपि नमस्यमानानां जिनबिम्बानामनेक-शोपलम्भः, अन्यतीर्थिकपरिगृहीतानां च तेषां तथैवानुवृत्त्युपलम्भाच्च । तथा चैतावतैव भवदभिमत-तीर्थाव्यवच्छित्तिसिद्धेः किं निष्फलेन चैत्यवाससंरम्भेण ? । न चैतावता तीर्थाव्यवच्छेदकार्येण निःश्रेयसादिफलसिद्धिः, मिथ्यादृष्टिपरिगृहीतानां प्रतिमानां मोक्षमार्गोनङ्गत्वेनाभिधानात् । 'मिच्छदिट्ठि-परिग्गहियाओ पडिमाओ भावगामो न हुंति त्ति' वचनात् ।

अथ द्वितीय [वि]कल्पस्तर्हि सैव तीर्थाव्यवच्छित्तिरभ्युपेयतां मोक्षमार्गत्वात्, किं तदनुगुणोत्सूत्र-चैत्यवासाश्रयणेन ? यदुक्तम्—

'तीसो सम्मिस्सगो वा गणिव्वमो वा न सुग्गइं निंति । जत्थेवें नाणदंसणचरणा ते सुग्गइम्मग्गो ॥'

सम्यग्ज्ञानदर्शनचारित्रानुवृत्तिं विना च जिनगृहबिम्बसद्भावेऽपि तीर्थोच्छित्तिः । अत एव क्षेत्रान्तरेषु केषुचित् रत्नत्रयविरहात् क्वापि जिनबिम्बसम्भवेऽपि तीर्थोच्छेदः प्रत्यपादि । तमविकल्पिता चेयं मङ्क्त्वा तीर्थाव्यवच्छित्तिरागमविसंवादित्वाद्धेयैव । यदाह—

'न य समयविपन्नेण जहा तहा कयमिणं फलं देइ ।
अविमागमाणुवत्त्या रोगतिगिच्छाविहाणं व ॥' ।

किं च भवतु जिनगृहाद्यनुवृत्तिस्तीर्थाव्यवच्छित्तिः, तथापि न यतिचैत्यवास-जिनगृहाद्यनुवृत्त्योः श्यामत्व-मैत्रतनयत्वयोरिव प्रयोज्य-प्रयोजकभावः । तथा हि—श्यामो देवदत्तो मैत्रतनयत्वात्, न चात्र श्यामत्वे मैत्रतनयत्वं प्रयोजकम्, किं तु शाकाद्याहारपरिणतिलक्षण उपाधिः । एवं न यतिचैत्यान्तर्वास-प्रयुक्ता तदनुवृत्तिस्तदन्तर्वसद्भिरपि यतिभिः सातशीलतया तच्छीर्णशीर्णोद्धारादिचिन्तामकुर्वाणैस्तदनुवृत्तेर-नुपपत्तेः, किं तु तच्चिन्ताप्रयुक्ता तदनुवृत्तिः । तां च श्रावैरेव कुर्वद्भिस्तदनुवृत्तिः कथं न स्यात् ? । न चोक्तन्यायेन श्राद्धानां दुर्गतानां श्रीमतां चेदानीं तच्चिन्ताकरणासंभव इति वाच्यम् । दुःषमादोषात् केषांचित् तथात्वेऽप्यन्येषां महात्मनां शुद्धश्रद्धाबन्धुराणां तदसंभवात् । तथा हि—दृश्यन्त एव संप्रत्यपि केचन पुण्यभाजः श्रावकाः सकुटुम्बभाराटोपं [स]श्रमतनयेषु निक्षिप्य जिनगृहादिचिन्तामेव सततं विदधानाः । अतस्तैरेवानुवृत्तिहेतुतच्चिन्तासिद्धेः किमिदानीं तना भवादृशा अपि सूरयश्चैत्यापदेशात् दमे भनारम्भानारम्भभाषा मुधैव क्लिश्यन्त इति । यदि 'जो जेणे'त्यादिना तीर्थानुच्छित्तिहेतोरपवादासेवनेन चैत्यवासस्थापनम्, तदप्यविदितसिद्धान्ताभिप्रायतां भवतः प्रकटयति । असान्यार्थत्वात् । अत्र हि यः कश्चिद् मत्यादिर्येन ज्ञानादिना गुणेनाधिको येन च विना यत्संपादिकार्यं गच्छगतम न सिध्यति, तेन तत्र स्वगुणवीर्यस्फोरणं विधेयमित्ययमर्थः । तथा हि—एतदुत्तरार्धमेव स्फुट 'सो तेण तम्मि कज्जे सव्वत्थाम न हावेइ' इति । अतो नैतस्मादपि भवदभिमतसिद्धिः ।

§१२) एवं च समस्तपरोपन्यस्तोपपत्तिनिराकरणाद् यतीनां जिनभवननिवासनिषेधसिद्धौ तत्स्थे साधनमभिधीयते । जिनगृहवासो मुनीनामनुचितः, आयमानदेवद्रव्योपभोगादिमत्त्वात् । प्रतिमापुरतो

आकवितीर्णबलिमिश्र्यक्तस्। न चायमसिद्धो हेतुः। तत्र संवसतां देवद्रव्योपभोगस्य शयनासनभोजनादिकरणेनानेकजन्मदारुणविपाकस्यावश्यमाविनत्वात्। नापि विरुद्धः, हेतोर्मुनिभोग्यतायाः व्याप्यत्वे - वि प सात्, न चैवमस्ति।

'देवस्स परीभोगो अणंतजम्मेसु दारुणविवागो। जं देवभोगभूमिसु वुडी न हु वहइ चरित्ते॥'

इति सिद्धान्तेन देवभूमिमुञ्जानस्य यतेश्चारित्राभावेन विपाकदारुणत्वस्य प्रतिपादितत्वात्। नापि सत्प्रतिपक्ष। आगमोक्तत्वादिप्रतिपक्षानुमानस्य प्रागेव निरस्तत्वात्। नापि बाधितविषयः। प्रत्यक्षादिभिरनपहृतविषयत्वात्। न च प्रत्यक्षेणैव संप्रति जिनगृहे वासदर्शने तद्वासस्य धर्मिणो मुन्यभोग्यत्वयोः साध्यधर्मस्य हेतुविषयस्य बाधितत्वेन विषयापहारात् कथं न हेतुर्बाधितविषय इति वाच्यम्। तेषां मुन्याभासत्वेन तत्र तद्वासदर्शनेनापि न तद्वासस्य मुन्ययोगतायाः बाधितत्वमिति हेतोर्विषयापहाराभावात् न बाधितविषयत्वमिति। तस्मैत्य मुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहितत्वात् - इति यावत्को हेतुरुक्तन्यायेन मुनीनां चैत्योपभोगयोग्यतायां देवद्रव्योपभोगादिदोषैरागमे बाधितत्वात् कालात्ययापदिष्टः। एवं च सति भगवद्गुणगायन-पण्याङ्गीनर्तन शङ्खपटहमेरीमृदङ्गाघातोत्थरवबहुकविविधिक्रियमाणतीमगुणामोदिसकलजिनमवनमाळपूजाविच्छित्तिविरचनादिमकत्वईश्वने देवद्रव्योपभोगात्।

पवीश्वरचरके गमनं सपुत्रपशुबान्धवः। देवेष्वभिकर्ति कुर्यात् गोषु च ब्राह्मणेषु च॥
तथा - नरकाय मतिस्ते चेत् पौरोहित्यं समाचर। वर्ष यावत् किमन्येन माठपत्यं दिनत्रयम्॥

इत्यादिप्रकारेण लोकनिन्दितत्वात् माठपत्यात् तीर्थसंसारकर्मोत्पातनात्मम कल्पमानाः साधवो जिनमतनिष्णाताः कर्थचित्त संवसन्ति। किं तु -

"ताहे सामी वासावासे कयागए त चेव सूरसेणतगगामं पर। तस्सेगम्मि पडए वासावासं ठिओ।'
तथा - 'ताहे सामी पावगिरिं गओ तत्थ बाहिरियाए तत्तुवायगगहसालाए एगदिसिं अहापडिरूवं मणुण्णविता विहरइ।।
तथा - 'अन्नया आयरिया मज्झण्हे साहुसु भिक्ख भिग्गएसु सन्नाभूमिं गया वइरसामी वि पडिस्सयपवालो त्ति।'

इत्यादि आवश्यक-चूर्ण्यादिमन्थेषु बहुशो वर्णनात्; साक्षादेव तीर्थकृद्गणधरनिषेधितायाम्;

'संविग्गसण्णिभद्दग सुवे नीयाइ मुक्कछाइंदे। वसतस्स पसु(?)वसहीपमग्गणा होइ।'
इत्यादिना समपर्ण भिन्नादिभिरनेकधा प्रतिपादितायाम्; तथा -

'धन्या अमी महात्मानो निःसंगा मुनिपुंगवाः।
अपि कापि समं नास्ति येषां तृणकुटीरकम्॥

इत्यादिवचनसंदर्भलोकपक्षस्वजनकनकतनयवनिवासजनपरिजनत्यागरूपपरिग्रहतामुक्त्यास्पदमूताया।

तथा - सिज्जायरु त्ति भण्णइ आलयसामि त्ति।'
तथा - 'सिज्जायरो पहू वा पहुसंदिट्ठो न होइ कायव्वो।'
तथा - मुत्तूण गेहं तु सपुत्तदारो वाणिज्जमाईहि कारणेहिं।
एयं च ... यएज देसं सिज्जायरो तत्थ स एव होइ॥

यथा—जो देइ उवस्सयं मुणिवराण तवनियमजोगजुत्ताणं ।
तेण दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥

इत्यादि-बहुधासिद्धान्ताक्षरदर्शनसंजातसात्त्विकामबोधगुभजनबहुमतायां वसतावेव सत्यामिधेयामगार-नामधेयाः साधवोऽवस्थानमाचरन्ते, न स्वत्यन्तापवादेऽपि जिनसमनीति स्थितम् । इत्यमुपन्यासमवन्ने-मोत्तरीकृतग्रन्थदिक्पक्षखरतरजनकोकनसूराचार्यं विधाय, ऊर्जीकृतमुखदण्डेनोक्तं भगवता कवच्च्या न्तर्भूसनमास्करेण श्रीजिनेश्वरसूरिणा । यथा—

एवं सिद्धान्तवाक्यैर्बहुविधघटनाहेतुदृष्टान्तयुक्तै-
स्तर्करसामिरेतैरचितवसुपथोदुमासनोष्णांशुकल्पैः ।
इत्याद्यप्रस्तवेशाः परगृहवसतिं द्वेष्टि योऽसौ निकृष्टो-
दुर्मापी चद्वैरः कथमपि न सतां स्यान्मतो नष्टकर्मः ॥

§११) इति तार्किकसमासचकमानन्ध, राजादिलोकप्रत्यायनार्थं भूयोऽप्यभिदधे श्रीजिनेश्वरसूरिणा—'महाराज ! युष्माकं लोके किं पूर्वपुरुषवर्धिता नीतिः प्रवर्तते, उताधुनिकपुरुषवर्धिता नूतना ?' राज्ञोक्तम्—'अस्मद्देशे समस्तेऽपि पूर्वजवणराजनीतिः प्रवर्तते मान्या ।' श्रीजिनेश्वरसूरिणोक्तम्—'महाराज ! अस्माकमपि मते गणधरैश्चतुर्दशपूर्वधरैश्च यो मार्गो दर्शितः स एव ममाप्यङ्गीक्रियते, नान्य ?' राज्ञोक्तम्—'इत्थमेवैतत्, पूर्वपुरुषप्रवर्तित एव पन्थाः सर्वत्र ममाणपदवीमध्यास्ते ।' जिनेश्वरसूरिणोक्तम्—'महाराज ! वयं दूरदेशादागताः, पूर्वपुरुषविरचितसिद्धान्तपुस्तकानि न कानिचिदानीतानि । तदेतेषां मठेभ्यो महाराज ! यूयमानायत पूर्वपुरुषविरचितसिद्धान्तपुस्तकाण्डकम्, येन युष्माकं प्रत्यक्षं सन्मार्ग-निश्चयाक्षराणि दर्शयामः ?' ततो राज्ञोक्तम्—'अहो ! युक्तमेते वदन्ति; भो भोः श्वेताम्बरसूरयः ! तदीयं श्वेताम्बरमेकं प्रेषयत पुस्तकदर्शनार्थं येन मदीयपुरुषा आनयन्ति ।'

तत एतेषामेव पक्षस्तेष्वपि भविष्यतीति निश्चिन्वन्त, श्रीजिनेश्वरसूरिवाग्भङ्गिस्मितान्तर्हृदया इवास्वनिश्चितवचनास्तूष्णीभूय स्थिताः सर्वेऽप्याचार्याः । राजपुरुषैस्तु गत्वा यद् प्रथमत एव हस्ते चटितं तदेवानीतं श्रीमं पुस्तकाण्डकम् । आनीतमात्रमेव छोटितम् । तत्र श्रीदेवगुरुप्रसादात् दशवैकालिकं श्चतुर्दशपूर्वधरविरचितं निर्गतम् । तत्र च प्रथममेवायं निर्जगाम श्लोको यथा—

'अन्नाई पगडं लेणं भएज्ज सयणासणं । उच्चारभूमिसंपन्नं इत्थीपसुविवज्जियं ॥'

श्रीजिनेश्वरसूरिणोक्तम्—'एवंविधे परगृहे वसन्ति साधवो न देवगृहे ?' श्रीदुर्लभराजनिचेऽसीव रुचम्, भणितं च—'अहो ! यथा वदन्त्येते तथैवैतत् ।' सर्वैरप्यधिकारिभिर्ज्ञातं यदुत निरुत्तरीभूता सर्वेऽप्यस्मद्गुरवः । ततः सर्वेऽधिकारिणो वदन्ति श्रीकरणिकप्रमुखाः प्रत्येकम्—देव ! एते अस्माकं गुरवः, एते अस्माकं गुरवः—इति । येन राजाऽस्मत्कारणेनाऽस्मद्गुरूनपि बहु मन्यते । राज्ञा च न्यायवादी यावत् किञ्चिज्जल्पति ।

§१२) अत्र प्रस्तावे भणितं विचक्षणशिरोमणिना श्रीजिनेश्वरसूरिणा—'महाराज ! कश्चिद्गुरुः श्रीकरणाधिकारिणः, कश्चिन्माण्डलिकाधिकारिणः, कश्चिन्मन्त्रिणः, कश्चिच्छ्रेष्ठिनः समभूत् । महाराज ! या मठिः (? मिठिः, म० ) सा कस्य सत्का भवति ?' राज्ञोक्तम्—'मदीया' । जिनेश्वरसूरिणोक्तम्—'तर्हि महाराज ! कोऽपि कस्यापि सम्बन्धी जातो वयं न कस्यापि ।' ततो राजा आत्मसम्बन्धिनो गुरवः कृताः ।

तवाऽऽसनः स्थानं चिन्तनीयम् ।' ततस्तेन तथोक्ते भयभीतया भणितं राज्या—'भो ! यद् येनानीतं तदेव स्वगृहे नेतव्यम् । मम नास्ति प्रयोजनं पूगीफलमात्रेणापि ।' एवमेषोऽप्युपायो विफलतां प्राप्तः ।—

§१६) ततश्चिन्तितस्तैश्चतुर्थ उपायो यथा—यदि राज्ञा देशान्तरागतमुनीन् मर्तुमस्यते तदा सर्वाणि देवसदनानि शून्यानि मुक्त्वा देशान्तरेषु व्रजिष्याम इति प्रघोषमके । केनापि राज्ञे निवेदितम् । राज्ञोक्तमतीव शोभनम्, गच्छन्तु यत्र रोचते । राज्ञा देवगृहपूजका वृत्त्या बहुका धारिताः । सर्वे देवाः पूजनीया युष्माभिरिति भणित्वा । परं देवगृहमन्तरेण यदि स्थातुं न शक्यते । तत कोऽपि केनापि व्याजेनागतः । किं बहुना सर्वेऽप्यागताः स्थिताश्च गृहेषु ।

§१७) श्रीवर्द्धमानसूरिरपि सपरिवारः क्षितिपतिसम्मानेनास्खलितप्रचार सर्वत्र देशे विहरति । कोऽपि किमपि कथयितुं न शक्नोति । ततः श्रीजिनेश्वरपण्डितः शुभलग्ने स्वपट्टे निवेशित । द्वितीयोऽपि भ्राता बुद्धिसागर आचार्यः कृतः । तयोर्भगिनी कल्याणमतिनाम्नी महत्तरा कृता ।

पश्चात् जिनेश्वरसूरिभिर्विहारक्रमं कुर्वद्भिः जिनचन्द्र-अभयदेव-धनेश्वर-हरिभद्र-प्रसन्नचन्द्र-धर्मदेव-सहदेव-सुमतिप्रभृतयो बहवः शिष्याः प्रचक्रिरे । ततो वर्द्धमानसूरयः सिद्धान्तविधिना समाधिना देवलोकश्रियं प्राप्ताः ।

§१८) पश्चात् श्रीजिनेश्वरसूरिभिः श्रीजिनचन्द्राभयदेवौ गुणपात्रमेताविति ज्ञात्वा सूरिपदे निवेशितौ । क्रमेण युगप्रधानौ जातौ । अन्यौ च द्वौ सूरी धनेश्वरो जिनभद्रनामा, द्वितीयश्च हरिभद्राचार्यः । तथा धर्मदेव-सुमति-विमलनामानस्त्रय उपाध्यायाः कृता । धर्मदेवोपाध्याय-सहदेवगणी द्वावपि भ्रातरौ । धर्मदेवोपाध्यायेन हरिसिंह-सर्वदेवगणी भ्रातरौ सोमचन्द्रपण्डितश्च शिष्या विहिताः । सहदेवगणिना अशोकचन्द्रः शिष्यः कृतः । स चातीव वल्लभ आसीत् । स च श्रीजिनचन्द्रसूरिणा विशेषेण पाठयित्वा आचार्यपदे निवेशितः । तेन च स्वपदे हरिसिंहाचार्यो विहितः । अन्यौ द्वौ सूरी प्रसन्नचन्द्र-देवभद्राख्यौ । देवभद्रः सुमत्युपाध्यायशिष्यः । प्रसन्नचन्द्राचार्यप्रमुखचत्वारोऽभयदेवसूरिणा पाठितास्तर्कादिशास्त्राणि । अत एवोक्तं श्रीचित्रकूटीयप्रशस्तौ श्रीजिनवल्लभसूरिभिः, यथा—

सत्तर्कन्यायचर्चार्चितचतुरगिरः श्रीप्रसन्नेन्दुसूरिः,
सूरिः श्रीवर्द्धमानो यतिपतिहरिभद्रो मुनीड् देवभद्रः ।
इत्याद्याः सर्वविद्यार्णवकलशभुवः संचरिष्णूरुकीर्ति
स्तम्भायन्तेऽधुनापि श्रुतचरणरमाराजिनो यस्य शिष्याः ॥

§१९) श्रीजिनेश्वरसूरय आशापल्ल्यां विहृताः । तत्र च व्याख्याने विचक्षणा उपविशन्ति । ततो विदग्धमनःकुमुदचन्द्रिकासहोदरी संविग्नवैराग्यवर्द्धनी 'लीलावती' अभिधाना कथा विदधे श्रीजिनेश्वरसूरिभिः । तथा डिंडियाणकग्रामप्राप्तैः पूज्यैर्व्याख्यानाय चैत्यवासाचार्याणां पार्श्वात् याचितं पुस्तकम् । तैः कलुषितहृदयैर्न दत्तम् । ततः पश्चिमप्रहरद्वये विरच्यते प्रभाते व्याख्यायते । इत्थं च तत्रैव 'कथानककोशः' चतुर्मास्यां कृतः ।

§२०) तथा मरुदेवानाम्नी गणिन्यभूत् । तया अनशनं गृहीतम्, चत्वारि दिनानि स्थिता, श्रीजिनेश्वरसूरिभिः समाधानमुत्पादितं तस्याः । भणिता च यत्रोत्पत्स्यते तत्स्थानं निवेदनीयम् । तस्यापि

'एवं भगवन्! विधास्ये' इति-प्रतिपन्नम्। पञ्चपरमेष्ठिनः स्मरन्ती सा स्वर्गं गता। जातो देवो महर्द्धिकः। एवं च तावदितश्च श्राद्ध एको युगप्रधाननिश्चयाय श्रीउज्जयन्तगिरौ गत्वा, 'साभिग्रहोऽहं स्थितोऽस्म्येवम्, यदोऽस्मिन्कश्चिद्देवताविशेषो यदि मम युगप्रधान प्रतिपादयिष्यति ततोऽहं मोक्ष्ये नान्यथे'ति सत्त्वमवष्टभ्यावस्थितः। उपवासान् कर्तुमारब्धः। एतस्मिन्नवसरे महाविदेहे श्रीतीर्थङ्करवन्दनार्थं गतस्य प्रशान्तेस्तेनार्यिकाजीवदेवेन संदेशको दत्त। यथा, त्वया श्रीजिनेश्वरसूरीणामग्रे इद निवेदनीयम्। तथा हि—

'मरुदेवीनाम अज्जा, गणिणी जा आसि तुम्ह गच्छम्मि।
सग्गंमि गया पढमे, जाओ देवो महिड्ढिओ॥ १
टक्कलयम्मि विमाणे दुसागराऊ सुरो समुप्पन्नो।
समणेसरस्स जिणेसरसूरिस्स इम कहिज्जासि॥ २
टक्कउरे जिणवंदणनिमित्तमेत्थागएण संदिट्ठं।
चरणम्मि उज्जमो मे! कायव्वो किं च सेसेहिं॥ ३

तेनापि च प्रशस्तान्तिना स्वयं गत्वाऽसौ संदेशकः सूरिपादानां पुरो न प्रकाशितः। किं तर्हि युगप्रधाननिश्चयनिमित्तमारब्धोपवासश्रावक उत्थापितः। तद्धस्ताग्रे लिखितान्यक्षराणि यथा—'म स द स ट च' मभिसन्ध गच्छ पत्तने यत्साधार्मस्य हस्तेन प्रक्षालितानि भासन्त्येतान्यक्षराणि स एवेदानींतनकाले भारते वर्षे युगप्रधानः। ततस्तेन श्रीनेमिजिन वन्दित्वा कृतपारणकेन पत्तनमागतेन सर्वासु वसतिषु गत्वा दर्शितान्यक्षराणि, परं न केनापि बुद्धानि। यदा तु श्रीजिनेश्वरसूरिवसतौ गत्वा दर्शितान्यक्षराणि तदा वाचयित्वा गाथात्रयमेतदिति समुत्पन्नप्रतिभैश्चेतसि पर्यालोच्य श्रीजिनेश्वरसूरिभिस्तान्यक्षराणि प्रक्षालितानि। ततस्तेन श्रावकेण चिन्तितम्—निश्चितं युगप्रधान एष इति। विशेषतो गुरुत्वेन स्वीकृत्व इति। इत्येवं श्रीमहावीरतीर्थङ्करवर्द्धितधर्मप्रभावनां कृत्वा श्रीजिनेश्वरसूरयः देवलोकं प्राप्ता इति॥

§ २१) पश्चाज्जिनचन्द्रसूरिवर आसीत् यस्याष्टादशनाममालाः सूत्रतोऽर्थतश्च मनस्यासन्। सर्वशास्त्रविदा येनाष्टादश(?)सहस्रप्रमाणा 'संवेगरंगशाला' मोक्षप्रासादपदवीभूता ग्रन्थमन्त्रुर्ना कृता। येन जावालिपुरे विहृतेन श्रावकाणामग्रे व्याख्यान 'चीवंदणमावस्सये'त्यादिगाथायाः कुर्वता ये सिद्धान्तसंवादाः कथितास्ते सर्वे सुशिष्येण लिखिताः। शतत्रयप्रमाणो दिनचर्याग्रन्थः श्राद्धानामुपकारी जातः। सोऽपि श्रीवीरधर्मं यथाशक्त्येन प्रकाश्य दिवं गतः॥

इति सुमतिगणिकृद्गणधरसार्द्धशतकबृहद्वृत्तिगतं
श्रीजिनेश्वरसूरिचरित्रवर्णन समाप्तम्।



## अज्ञातकर्तृक-कतिचित्-खरतरगच्छपट्टावलिगताः श्रीजिनेश्वरसूरिविषयकाः संक्षिप्तोल्लेखाः ।

[ १ ]

उद्योतनसूरि[ पट्टधर ]श्रीवर्द्धमानसूरिभिः श्रीविमलदण्डनायकः प्रतिबोधितः । तदभ्यर्थनया षण्मासीं यावदाचाम्लानि कृत्वा षण्मासान्ते ध्यानाकृष्टः धरणेन्द्रः समागतः । हृष्ट बोधयित्वा पृष्टवान्—भगवन् ! किमर्थमाकृष्टः ? भगवता उक्तम्—पातालात् श्रीजिनमूर्तिं प्रकटीकुरु, यथात्र पर्वते प्रासादं कारयामः । ततो धरणेन्द्रेण पातालात् श्रीयुगादिमूर्तिर्वज्रमयी प्रकटीचक्रे । तथा च गुरुणा स्तुत्वा वन्दिता । ततः धरणेन्द्रात् श्रीसूरिमन्त्ररहस्यानि पृष्टानि । तेन सर्वाणि कथितानि । तत्र श्रीविमल-दण्डनायकेन तत्रस्थान् मिथ्यादृष्टीन् ब्राह्मणानाकार्य मूर्तिर्दर्शिता । उक्तं च—भोः ! पश्यत, अत्र श्रीजिन-मूर्तिर्भूमिरेखना प्रकटीभूता । भवद्भिरुक्तमभूत् यत् श्वेताम्बरतीर्थं नाभूत् । तदलीकं जातम् । अथ प्रासादकरणे निषेधो न कार्यः । ततो विमलदण्डनायकेन प्रचुरद्रव्यं दत्वा टकारपत्रकेन भूमिं पूरयित्वा प्रासादः कारितः । श्रीजिनशासने महती प्रभावना तीर्थोन्नतिश्चक्रे ।

श्रीपत्तनवास्तव्यौ जिनेश्वर-बुद्धिसागरौ ब्राह्मणौ । महाविद्वांसौ । मोक्षार्थं सोमनाथवन्दनाय चलितौ । सोमनाथस्तयोरुपरि संतुष्टः । सन्मुख समागत्य कथितम्—किमर्थमत्र समागतौ ? ताभ्यामुक्तम्—मोक्षाय । तेनोक्तम्—मम सेवया मोक्षो न प्राप्यते । तर्हि मोक्षः कस्य पार्श्वे प्राप्यते ? तेनोक्तम्—श्रीवर्द्धमानसूरीणामादेशं कुर्वाथाम्, यथा मोक्षः प्राप्यते । ताभ्यामुक्तम्—ते कुत्र संति साम्प्रतम् ? तेनादिष्टं तत्र पत्तने संति । तौ तत्र समागतौ । गुरुभिः सम्यक् प्रतिबोधितौ । क्रमेण जिनेश्वरस्य भट्टारकपदं जातम् । बुद्धिसागरस्य आचार्यपदं जातम् । पश्चात्तस्य अनशनेन अर्बुदाचले दिवं गताः ।

श्रीजिनेश्वरसूरिभिः लीलावतीकथा अनेकार्था कृता, कथाकोशश्च । तथा मरुदेविगणिन्या अनशनं गृहीतम् । चत्वारिंशद्दिनानि स्थिता । श्रीजिनेश्वरसूरिणा समाधानमुत्पादितम् । भणितम्—भवोत्पन्नस्थाने स्वस्थानं कथनीयम् । तया अंगीकृतम्—कथयिष्यामि । तदा प्रशान्ति-श्रीसीमंधरस्वामि-वन्दनार्थं महाविदेहे गत । तत्राग्रे मरुदेविदेवेन श्रीगुरूणां च म स ट स ट च इति संदेशो भणितः ।

मरुदेविनाम अज्जा गणिणी जा आसि तुम्ह गच्छंमि । सग्गंमि गया पढमे, देवो जाओ महड्ढिओ ॥ १
टक्कलयंमि विमाणे दुसागराऊ सुरो समुप्पन्नो । समणेसरस्स जिणेसरसूरिस्स इमं कहिज्जासु ॥ २
टक्कउरे जिणवंदणनिमित्तमेवागएण कहेज्जासु । चरणंमि उज्जमो मे कायव्वो किं विसेसेण ॥ ३

संवत् १०२४ (?) वर्षे अणहिल्लपत्तने चैत्यवासिनो निर्जिताः । श्रीदुर्लभराजसमक्षं श्रीजिनेश्वर-सूरिभिः पूर्वं यदाशीर्वादो दत्तस्तथेदम्—

श्रिये कृतनतानंदा, विशेषवृषसंगताः । भवन्तु तव राजेन्द्र ! ब्रह्म-श्रीधर-शंकराः ॥ १

इति श्रीजिनेश्वरेण श्रीदुर्लभराज्ञः आशीर्वादो दत्तः । विशेषधर्मेण संगता । द्वितीयपक्षे वि पक्षी राजहंसः, शेष शेषनागः, वृष वृषभस्तैः संगताः । ब्रह्मज्ञानश्रीधारिणस्तीर्थंकराः । ब्रह्मा विष्णुर्महेश्वरश्च । आशीर्वादानन्तरं वादः । पश्चात् निर्जित्य खरतरबिरुदं प्राप्तं । श्रीधनपालपितृप्रतिबोधकारकः । शोभनदीक्षादायकः । ततो द्वादशवर्षानन्तरं धनपालः प्रतिबोधितः । सम्यक्त्वधारी प्रभावको जातः ।

[ २ ]

तेहनइ पाटि श्रीवर्धमानसूरि जिणे मालवाथी शत्रुंजय यात्रार्थे आवतां संघसु रात्रे रोहिणीशकटमध्ये आकाशे बृहस्पतिप्रवेश देखी गच्छवृद्धि जाती जाणी समीपस्थ अन्य साधु-अभावे महास्व निज शिष्यनइ वासाभावेन छगणचूर्णीय वासक्षेप करी सूरिपद दीधउ। तेहो गच्छवृद्धि। जिणे ११ पातिसाह छत्रेद्धारक चन्द्रावती नगरी स्थापक विमलदण्डनायक कारित श्रीअर्बुदाचलोपरि श्रीविमल-वसही प्रासादि ध्यानबलि वालीनाह क्षेत्रपाल अनइ वज्रमय श्रीआदीश्वरनी मूर्ति प्रकट करी थापी। वली जिणे ९ माससांइ आंबिल करी धरणेन्द्र प्रकट करी सूरिमंत्र शुद्ध कीधउ। आबू उपरि स्वर्गि पहुता।

तेहनइ पाटि श्रीजिनेश्वरसूरि हुया। ते किम? श्रीवर्धमानसूरि सरसइ पाटणि वान करी, आवता जिनेश्वर बुद्धिसागर भाई। ब्राह्मणना मस्तकमांहि रही माछली दिखाडी। दया चिपइ प्रतिबोधी दीक्षा लेहि निकस्या। क्रमइ क्रमइ बेइ साधु भाई गीतार्थ हुया। वर्धमानसूरिइ जिनेश्वरसूरि पाटि थाप्या। बुद्धिसागरनइ आचार्यपद दीधउ। कल्याणमति महत्तरा कीधी। श्रीजिनेश्वरसूरि अणहिलपाटणि पहुता। तिहां सोम पुरोहितनइ घरे रह्या। पुरोहितनइ साहाय्यइ करी संवत १०८० वरसि दुर्लभराज सभामांहि ८४ चैत्यवासी साथि वाद करतां राजइ पुस्तिका आणावि भण्डारमांहि श्रीदशवैकालिकसूत्र पुस्तिका ते माहि—"अन्नट्ठं पगडं लेणं०" ए गाथायइ करी चैत्यवासी जीता। राजाइ कह्युं ए अति खरा ते भणि खरतर बिरुद आपउ। मरुदेवी गणिन्या अनशनेन ४० दिनस्थितायां श्रीजिनेश्वरेण समाधानमुत्पादितम्। भणितं च स्वोत्पत्तिस्थानं वाच्यम्। ततः स्वर्गोत्पन्नया श्रीसीमंधरवंदनार्थे गतया श्रीप्रभशान्ति मोक्तः। श्रीगुरूणामिदं वाच्यम्—'म स ट स ट च' इति। कोऽर्थः। "मरुदेवी नाम अज्जा०" १ "टक्कलयंमि सियाणे०" २ "टक्कउरे जिणवंदण०" ३

श्रीजिनेश्वरसूरिनइ पाटि संवेगरंगशालाप्रकरणना करणहार श्रीजिनचन्द्रसूरि हुआ।

[ ३ ]

तेहनइ पाटि श्रीवर्धमानसूरि तेरह पातिसाह छत्रोद्धारक चन्द्रावती नगरीथापक विमल दण्डनायक कारित श्रीआबू ऊपरि श्रीविमलवसही प्रासादि ध्यानबलि वालीनाह क्षेत्रपाल अनइ हीरामय आदीसरनी मूरति प्रगटि करी थापी। वली जिणे छम्मास सांई आंबिल करी धरणेंद्र प्रकट करी सूरमंत्र खरो करावयो।

एकदा मरुधरि श्रीवर्धमानसूरिइ सरसइ पाटणि समान करी आवतां जिनेश्वर अनइ बुद्धिसागर बे भाइ ब्राह्मण तेहना माथामांहि रही मांछली दिखाडी दया दीपावी प्रतिबोधी दीक्षीया। तेहनि बहिनि कल्याणमति ते पीण दीक्षी। क्रमइ बेई साधु गीतार्थ थया। वर्धमानसूरइ श्रीजिनेश्वरसूरिनइ पाटि थाप्या। बुद्धिसागरनइ आचारिजपद दीधउ। कल्याणमति महत्तरा कीधी। श्रीजिनेश्वरिसूरि अणहिल पाटणि पहुची तिहां सोमपुरोहितनइ घरे रह्या। पुरोहितनइ साहाय्यइ करी संवत दस सय असीयइ श्रीदुर्लभराज सभामांहि चोरासी चैत्यवासीसु वाद करतां राजपुत्रीमइ आणी भण्डारमांहिथी दस वैकालिक पोथी ते मांहि 'अन्नत्थ पगडं लेण' इत्यादि गाथायइ करी चैत्यवासी खोटा करी लीधा। राजायइ कह्यउ ए अति खरा। तिहां जिनेश्वरसूरइ खरतर बिरुद आपउ।

* * *

श्रीमद्वर्द्धमानसूरिशिष्यश्रीजिनेश्वरसूरिसन्दृब्ध

# कथाकोशप्रकरणम् ।

॥ ॐ नमः सर्वज्ञाय ॥

नत्वा जिनं गुरुं भक्त्या वर्द्धमानं समासतः ।
कथाकोशस्य विवृतिं वक्ष्ये सूत्रानुसारतः ॥ १ ॥

इह चातीव दुर्लभं लब्ध्वा मानुषत्वमार्यदेशोत्पत्त्यादिकां च समासाद्य समग्रसामग्रीं सुखलिप्सुभिः पुरुषार्थेषु यत्नो विधेयः । यत उक्तम्–

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥

परमपुरुषार्थश्च मोक्ष एव । तस्यात्यन्तिकानाबाधसुखहेतुत्वात् । तस्य च सम्यक्त्वादीनि साधनानि । 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' – इति पूर्वसूरिवचनात् । अतस्तदुत्साहजनकं कथाकोशाख्यं प्रकरणं चिकीर्षुराचार्यः शिष्टसमयपरिपालनाय विघ्नविनायकोपशान्तये च, इष्टदेवतास्तवपूर्वमभिधेयप्रयोजनादिप्रतिपादिकामिमामाद्यामेव गाथामाह–

नमिऊण तित्थनाहं तेलोक्कपियामहं महावीरं ।
वोच्छामि 'मोक्खकारणभूयाइं कइ वि नायाइं ॥ १ ॥

अत्र गाथार्धेनेष्टदेवतास्तवम्, उत्तरार्धेन च प्रयोजनादीन्याह – 'कइ वि नायाइं' इत्यभिधेयपदम् । 'मोक्खकारणभूयाइं' प्रयोजनपदम् । तदन्तर्गत एवाभिधेयाभिधानलक्षणः सम्बन्धोऽप्युक्त एवेति । पदघटना – 'नत्वा' – प्रणम्य, कम् ? – 'तीर्थनाथम्' – चतुर्विधश्रीश्रमणसङ्घाधिपम् । किंभूतम् ? – 'त्रैलोक्यपितामहम्' – लोकत्रयस्य हितत्वात् पूज्यत्वाद् गुरुत्वाच्च पितामहम् । पातीति पिता, धर्म एव तज्जनकत्वात् । कमित्याह – 'महावीरम्' – चरमतीर्थकरम् । अत एव प्रस्तुततीर्थनाथम् । 'वक्ष्ये' – अभिधास्ये, 'मोक्षकारणभूतानि' – सम्यक्त्वाद्युत्साहजनकानि । 'कतिचित्' – स्तोकानि, 'ज्ञातानि' – उदाहरणानि दृष्टान्तानिति गाथासंक्षेपार्थः ।

यथाप्रतिज्ञातमेवाह–

जिणपूयाए तहाविहभावविउत्ताए' पावए जीवो ।
सुरनरसिवसोक्खाइं सूयगमिहुणं इह नायं ॥ २ ॥

'जिनानाम्' – तीर्थकराणाम्, तद्बिम्बानामपि पूजा तत्स्वरूपेणैव पूजा, जिनपूजा, तया; किंभूतया ? – 'तथाविधभावयुक्तयाऽपि' – विशिष्टबहुमानशून्ययाऽपि । अपेर्गम्यमानत्वात् ।

1 B चात्यन्त । 2 B सुख° । 3 A °विरहय । 4 B पूजया जिनेन्द्राणां । 5 B नास्ति 'तथाविध' ।
6 B नास्ति वाक्यमिदम् ।

'प्राप्नोति'–लभते, 'जीवः'–सत्त्वः, विषयप्राधान्यात्। 'सुरनरशिवसौख्यानि'–स्वर्गं मानवमर्त्येन्द्र-लोकमोक्षशर्माणि। 'शुकमिथुनमिह ज्ञातम्'। किं तच्छुकयुगलम्?–अत्र कथानकम्। तच्चेदम्–

## १ शुकमिथुनककथानकम्।

अत्थि इहेव भारहे वासे विंझगिरिपायमूले एगा महाडवी। तत्थ य एगत्थ पएसे एगो सिंबलि-पायवो भूमीपेरंतनिरूवणत्थमिव गयणयलमइगओ, उवरामहो व्व पत्तलकीरसंघाओ चिट्ठइ। तत्थ य–'मा सुहारोहपच्छसाहानिवेसियनीडा भिल्लाईणमभिगमणिज्जा भविस्सामो'–त्ति बुद्धीए एगेण सुयजुयलेण कयं तस्स सिहरे नीडं। अन्नया विरहिणीहिययवणदावानलो साहीणपियपमाणं पमोयसंजणगो[1] पत्तो वसन्तो। तम्मि य मउरिज्जंति पायवा। तओ सुहापीविज्जमाणं व सुयमिहुणयं सहयारमंजरीओ गहाय सनीडमागच्छइ। ताओ य[2] पुप्फफलभरक्कंताओ न सक्कइ[3] सनीडं पाविउं। इओ य[4] तत्थेव अडवीपएसे वेयड्ढवासिविज्जाहरेहिं भगवओ तिलोयनाहस्स 'जुगादिदेवस्स मुत्तासेलमई पडिमा पइट्ठिया अहेसि। अओ[7] सव्वरिं विज्जं समा देंति[8] पडिच्छंति य तया तीसे पडिमाए महामहिमं काऊण तीसे पुरओ देंति पडिच्छंति य। तओ सबरवेसधारिणो विज्जाहरा सं विज्जं साहेंति। तं च सुयमिहुणयं विस्सामनिमित्तं व पएसमागयं। ताओ मंजरीओ भगवओ[9] सीसे मुंचइ। सयं विस्समिय सनीडं गच्छइ। एवं वच्चंति वासरा। अण्णया य[10] विज्जाहरेहिं[11] विरइयविसिट्ठपूयं दट्ठूण–'पूयणिज्जो को वि[12] एसो, ता अम्हे वि एयं[13] पूएमो त्ति'–संजायबुद्धिणो अणायविण्णगुणवणओ विसिट्ठसहयारकुसुमाणविरहिएण तेण सुयमिहुणेण पूयणत्थं ठवियाओ मंजरीओ भगवओ सीसे। तओ य विसयकम्मुसओगेण निबद्धं सहाणुरूवं देवाउयं। पालिय तिरियाउयं मरिउं उववन्न[14] देवेसु मिहुणगं। मिहुणगभावेण पडायावडिया नाओ पुव्वभवो सुरलोयागमणकारणं च। तओ आगम्म कया तीए पडिमाए महामहिमा[15]। पाविय सम्मत्तं। तओ तित्थगराण कल्लाणगेसु नंदीसराइगमणेण सह तित्थयराणं समोसरणकरण[16]पिच्छणयवंदण-धम्मसवण-पज्जुवासणाईहिं बोलिंति पायसो दियहाइं। तओ संपत्त विसुद्धदंसणं। देवाउयक्खएणं चुओ देवो पढमयरं। तहाविहमविसयाए सागेए नयरे जियसत्तुणो रन्नो धारिणीए देवीए समाढूओ गब्भे पुत्तत्ताए त्ति। जाओ पुण्णेसु दियहेसु सुकुमालओ देवकुमारोवमो दारगो। कयं वद्धावणयं। तो निवत्ते सूइकम्मे, अइक्कंते बारसाहे, कयं सुरसुंदरो त्ति से नामं। पंचधाईपरियरिओ वड्ढिउं पयत्तो[17]। देसूणअट्ठवरिसो उवणीओ लेहायरियस्स। अहिज्जियाओ परिपुण्णाओ कलाओ। जाओ [18]वारिज्जयजोग्गो। वरिज्जंति पहाणरायकन्नगाओ। नेच्छइ[19] परिणेउं। विसण्णो जणगो[20]। इओ य सा मिहुणयदेवी पाडलिपुत्ते [21]अरिमद्दणरन्नो पउमावईए गब्भे सुरलोगाओ[22] चुया, जाया धूयत्ताए। जाया कालेण अपरिमियगुणगणारूवा। पइट्ठियं से नामं पडिरूव त्ति। [23]वड्ढिया देहोवच(च)एण। [24]गहियाओ इत्थीजणजोग्गाओ कलाओ। जाव[25] जोव्वणत्था। सा य पुरिसद्देसिणी, नेच्छइ परिणेउं[26]। तओ से पिउणो पुरोहिएण सिट्ठं–'अप्राप्ते रजसि कन्यां दद्यात् पिता सकृत्'–इत्यादि। विसण्णो अरिमद्दणो–हा! नरए पाविस्सइ[27] एस त्ति। भणियं मंतिणा सुबंधुणा–'देव! मा विसायं करेह, कारेह सयंवरं'। भणियं सेसमंतीहिं–'न एसो चक्कवट्टि-धाउ

1 B °पत्त°। 2 B °संजणगो। 3 'य' नत्थि B। 4 B सक्कइ। 5 A इव। 6 A कुवार°। 7 B ताओ। 8 B दिंति। 9 A ममंतो। 10 'य' नत्थि B। 11 B °हरेहिं। 12 A कोइ। 13 'एयं' नत्थि A। 14 A उववन्न। 15 B 'महिमा' इत्येव। 16 B °पिच्छणयपिच्छणय°। 17 B पयत्तो। 18 A वारेयम°। 19 B निच्छइ। 20 B जणओ। 21 A अरिदमण°। 22 B °लोयाओ। 23 A वड्ढिया°। 24 A वड्ढिया। 25 A जाया। 26 नत्थि एयमिणं B। 27 A पाविस्सइ।

